ॐ श्रीगणेशायनमः ब्रह्माद्यनिखिलार्चितांघ्रिदर्शसंदोहः सदाभीष्टदास्त्वज्ञानप्रणाशमाययत्र
मनसोवृत्तिंसमस्तांदधुः श्रीविश्वेश्वरणांबुजंभवभयध्वंसैकवीजंपरंहृत्पद्मेविनिधायतन्निरू
पणंतर्कामृतंतन्यते १ अथश्रुतिःश्रूयते आत्मावारेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्य
इति अस्यार्थः मुमुक्षुणाआत्माद्रष्टव्यःमुमुक्षोरात्मदर्शनमिष्टसाधनमितियावत् आत्म
दर्शनोपायःकइत्यत्राह श्रोतव्यइत्यादिनार्थक्रमेणागृहक्रमस्यकोभवति अग्निहोत्रंजुहो
तियवागूंपचतीत्यादिवत् तथाचश्रवणमनननिदिध्यासनानितत्त्वज्ञानजनकानीत्युक्तंभव
ति अत्रश्रुतितःकृतात्मश्रवणस्यमननेऽधिकारः मननंचात्मनइतरभिन्नत्वेनानुमानंतच्च
भेदप्रतियोगीतरज्ञानसाध्यंतथाचेतरदेवकियदित्येतद्दर्शयन्पदार्थनिरूपणंसंक्षेपतः पदार्थाः
द्विविधः भावोऽभावश्चभावःषड्विधः द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात् तत्रद्रव्य
त्वगुणत्वकर्मत्वानिजातयःसामान्यत्वादीनिउपाधयः द्रव्याणिनवपृथिव्यप्तेजोवाय्वाका
शकालदिगात्ममनांसि आकाशत्वकालत्वदिक्त्वानिउपाधयः अन्यानिजातयः तत्ररूपर
सगंधस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराश्चतुर्द

श्रुत्यर्थपठनस्यानमुख्य
प्रवृत्त्यापत्त्यानीत्यत्रक्र
मनियामकप्रमाणाभू
तरीतोस्मृतेर्मिनीयेन
प्राबल्यस्यसिद्धांतित
त्वात्=६

त.कौ.
२

वीयं श्रोत्रेंद्रियंकर्णशष्कुल्यवच्छिन्नोनभःप्रदेशः एतानिपंचबहिरिंद्रियाणिमनोंऽतरिंद्रियं ते
नघ्रिंद्रियाणि विषयाश्चघ्राणादिरूपेणप्रसिद्धाः आत्माद्विविधः जीवात्मापरमात्माच तत्रजी
वात्मानःप्रतिशरीरंभिन्नाःवंधमोक्षयोग्याः परमात्माईश्वर भूय प्रत्यक्षानंतरद्रव्याणि पर
माणुद्व्यणुकेऽप्रत्यक्षेमहद्भूतरूपवत्वेयत्रतानि पृथिवीजलतेजांसिप्रत्यक्षाणि आत्मावयु
त्वक्तः वायुआकाशकालदिङ्मनांसिअप्रत्यक्षाणिवहिरिंद्रियप्रत्यक्षंप्रतिमहत्वेसत्युद्भूतरूपवत्वं
५६ प्रयोजनके अणुद्व्यणुकोत्पत्तिक्रियातन्नोत्पत्तिः कारणवत्ता अनन्यथासिद्धनियतपूर्ववृत्तिकार
णंतत्वेकारणत्वेयन्नियतपूर्ववर्तिताएवकार्यसमवेतद्विन्नमन्यथासिद्धम् त्रिविधानिकार
णानि समवायिकारणासमवायिकारणनिमित्तकारणानि यत्समवेतंकार्यमुत्पद्यतेतत्सम
2
वायिकारणं यथापरमाणुद्व्यणुकस्यकपालघटस्यसमवायिकारणसंबद्धंकारणमसमवायि
कारणं यथापरमाणुद्वयसंयोगोद्व्यणुकस्य कपालद्वयंघटरूपस्य एतदुभयभिन्नंयत्कारणं
तन्निमित्तकारणं यथाद्व्यणुकेईश्वरः घटेदंडः एतत्कारणत्रयंभावकार्यमात्रस्य तत्रसमवा
यिकारणंद्रव्यमेवासमवायिकारणंद्रव्यगुणोगुणः कर्मच कार्यमात्रप्रतिसाधारणकारणं १२

राम
२

श गुणाः पृथिव्यां तत्रैव गंधं विहाय स्नेहं विनियोज्य चतुर्दश गुणाः जलस्य रूपस्पर्शसंख्याप-
रिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारा एकादश गुणास्तेजसः स्पर्शसंख्यापरि-
माणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा नव गुणा वायोः शब्दसंख्यापरिमाणपृथक्त्वसं-
योगविभागाः षड्गुणा आकाशस्य संख्यापरिमाणपृथक्त्वसंयोगविभागाः पंच गुणाः कालदिशोः
संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्द-
श गुणा आत्मनः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अष्टौ गुणा मनसः
ज्ञानेच्छाकृतिसंख्यादिपंचकं अष्टौ गुणा ईश्वरस्य तथा च वायोर्नवैकादश तेजसो गुणा जलक्षि-
तिप्राणभृतां चतुर्दश दिक्कालयोः पंच षडेव चांबरे महेश्वरेऽष्टौ मनसस्तथैव च तत्र पृथिवीज-
लतेजोवायवो द्विविधाः परमाणवः सावयवाश्च आकाशकालात्मदिशो विभुरूपाः मनः पर-
माणुरूपं तत्र सावयवा अनित्या इतराणि नित्यानि सावयवोऽपि त्रिविधः शरीरेंद्रियविषयभे-
दात् मानुषशरीरं पार्थिवं जलीयशरीरं वरुणलोके प्रसिद्धं तैजसशरीरमादित्यलोके वा-
यवीयशरीरं वायुलोके घ्राणेंद्रियं पार्थिवं रसनेंद्रियं जलीयं चक्षुरिंद्रियं तैजसं त्वगिंद्रियं वाय-

त्वे साक्षात्संबंधाभावेमतिविशिष्टज्ञानत्वात् लोहितस्फटिक इति प्रत्ययवत् परंपरसंबंधश्च रविक्रिया
याः स्वसमवायिसंयुक्तसंयोगः तेन संबंधघटकः कालः सिध्यति ननु कालस्य भूतभविष्यद्वर्त्तमान
भेदेन वकृत्वात्कथमेकत्वमिति चेन्न उपाधिभेदेन भेदश्चन्यथा कालोपाधयो रविक्रियादिरूपा भिन्नाः एवं
दैशिकपरत्वापरत्वाभ्यां दिशः सिद्धिः तच्च दूरत्वसमीपत्वे अवधिसापेक्षवकृतरसंयोगविशिष्टशरीर
ज्ञानमिदं परत्वजनकं परंपरासंबंधघटकसापेक्षमित्यादि पूर्ववत् तेन च दिशः सिद्धिः न चाका
शमेव संबंधघटकमास्तामिति वाच्यं तस्य शब्दाश्रयत्वेनैव धर्मिग्राहकप्रमाणसिद्धत्वात् न रवि
क्रियायुपनायकत्वसंभवः अहं सुखीत्यादिप्रत्यक्षमात्मनि प्रमाणं ईश्वरे चानुमानं यथा क्षितिः
सकर्तृका कार्यत्वात् घटवत् तेनेश्वरस्य नकृतिनित्यत्वानेकाकृतीनां तत्सार्वज्ञस्य च सिद्धिः मन
सि प्रमाणं यथा सुखादिप्रत्यक्षं सेंद्रियजन्यं जन्यप्रत्यक्षत्वात् घटप्रत्यक्षवत् तथेंद्रियान्तरबाधमन
सः सिद्धिः अथ द्रव्यनाशप्रक्रिया द्रव्यनाशो द्विविधः क्वचिदसमवायिकारणनाशात् क्वचित्सम
वायिकारणनाशाच्च तत्राद्यो यथा परमाणुद्वयसंयोगनाशात्त[illegible]णुकनाशः द्वितीयो य
था कपालनाशात् घटनाशः उभयतः संभवति आकाशकालदिगात्मपरमाणु

3

न्ति ईश्वरस्तज्ज्ञानेच्छाकृतयः प्रागभावकालदिगदृष्टानि तत्र परमाणुद्वयसंयोगात् द्व्यणुकमु-
त्पद्यते संयुक्तद्व्यणुकत्रयात्त्रसरेणुः एवं च त्रसरेण्वादिकपालान्तं कपालद्वयसंयोगेन घटो जा-
यते घटस्त्वन्त्यावयवी अणुद्रव्यप्रमाणं कथ्यते प्रत्यक्षद्रव्ये प्रत्यक्षमेव प्रमाणं अतीन्द्रियेऽनुमा-
नं तत्पदे दृष्टान्तसाधनसाध्यविशेषो वक्तव्ये परमाणुद्व्यणुकानुमानं यथा त्रसरेणुः साव-
यवद्रव्यारब्धः बहिरिन्द्रियवेद्यद्रव्यत्वात् बहिरिन्द्रियवेद्यद्रव्यं यत्तत्सावयवद्रव्यारब्धं यथा घटः
त्रसरेणुः पक्षः सावयवद्रव्यारब्धत्वं साध्यं बहिरिन्द्रियवेद्यद्रव्यत्वादिति हेतुः घटो दृष्टान्तः अनेन
द्व्यणुकपरमाणू सिध्यतः आकाशवायू शब्देन स्पर्शेन चानुमीयेते शब्दो द्रव्याश्रितो गुणत्वात्
यथा घटरूपं अनेन द्रव्यान्तरबाधात् शब्दाश्रयत्वेनाकाशं सिध्यति पृथिव्यादित्रयावृत्तिरयं स्पर्शो द्र-
व्याश्रितो गुणत्वात् अनुमानेन द्रव्यान्तरबाधात् स्पर्शाश्रयत्वेन वायुः सिध्यति कालप्रमाणं यथा
परत्वापरत्वे द्विविधे कालिके दैशिके च परत्वोत्पत्तिनिमित्तं बहुतरविक्रियाविशिष्टशरीरज्ञानात्
अपरत्वोत्पत्तिनिमित्तस्य स्वल्पतरविक्रियाविशिष्टशरीरज्ञानात् तत्परत्वं ज्येष्ठत्वमपरत्वं कनिष्ठत्वं
तदनुमानं यथा परत्वजनकं बहुतरविक्रियाविशिष्टशरीरज्ञानमिदं परंपरासंबंधघटकसापे-

तर्की.
७

रः पृथिवीजलतेजोवायुआत्ममनोवृत्तिः सचिविधः वेगोभावनास्थितिस्थापकश्च तत्रवेगः पृथि
व्यादिचतुष्टयमनोवृत्तिः द्वितीयः आत्मवृत्तिः तृतीयः पृथिव्यादिचतुष्टयवृत्तिः शब्दोद्विविधः व
र्णात्मकोध्वन्यात्मकश्च आकाशमात्रवृत्तिः रूपरसगंधस्पर्शस्नेहसांसिद्धिकद्रवत्वशब्दबुद्धिसुख
दुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाविशेषगुणाः तथाचोक्तं रूपंगंधोरसःस्पर्शस्नेहःसांसिद्धिको
द्रवः बुद्ध्यादिभावनांताश्च शब्दोवैशेषिकोगुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वा
परत्वगुरुत्वनैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः अथनित्यगुणाः जलतेजोवा
युपरमाणूनां विशेषगुणाः परमाणुवृत्तिगुरुत्वंस्थितिस्थापकश्च विभूनांपरमाणूनां चएकत्व
परिमाणपृथक्त्वानिद्वित्वैकाज्ञानकृतयश्चनित्यगुणाः अथानित्यगुणाः गुरुत्वधर्माधर्मभाव
नास्थितिस्थापकाश्चपरमाणुद्व्यणुकवृत्तिगुणाः अतींद्रियवृत्तिसामान्यगुणाः चत्वारोलोकरूप
विहायान्येगुणाः अतींद्रियाः रूपरसगंधस्पर्शस्नेहश्चमहद्वृत्तित्वेसतिउद्भूतत्वेप्रयोज
कं सामान्यगुणप्रत्यक्षेआश्रयप्रत्यक्षं बुद्धिप्रत्यक्षेस्ववृत्तिविशिष्टज्ञानत्वं सुखादिप्रत्यक्षेस्वव
त्तिमत्त्वत्वादिकमेवअंन्यायप्रयाशास्त्रोविहायसर्वशब्दः प्रत्यक्षः अथगुणोत्पत्तिप्रक्रिया अवयववृत्ति

4

वोऽस्त्रयः समवायश्च पृथिव्यादिपंचानां भूतत्वं पृथिवीजलतेजोवायुमनसां क्रियावत्त्वमूर्तत्वे पृथि
व्यप्तेजोवायवो द्रव्यसमवायिकारणानि कालस्य कालिकसंबंधेन सर्वाधिकरणत्वं दिशो दैशिकसं
बंधेन सर्वाधिकरणत्वं अथ गुणाः कथ्यंते रूपरसगंधस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपर
त्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाश्चतुर्विंशतिर्गुणाः अत्र
रूपत्वादीनि सर्वाण्येव जातयः रूपं पृथिवीजलतेजोवृत्ति तच्च शुक्लरक्तपीतचित्रादिभेदेन बहुवि
धं पृथिवीवृत्ति स्वाभाविकशुक्लरूपं जलवृत्ति शुक्लभास्वरं तेजोवृत्तिः रसः पृथिवीजलवृत्ति तच्च मधु
रलवणकटुतिक्ताम्लकषायभेदात्षड्विधोरसः पृथिव्यां जले मधुर एव रसः गंधो द्विविधः सुरभिरसु
रभिश्च पृथिवीमात्रवृत्तिः स्पर्शः पृथिव्यादिचतुष्टयवृत्तिः स च त्रिविधः अनुष्णाशीतः शीत उष्ण
श्च अनुष्णाशीतस्पर्शो वायुपृथिव्योः जले शीतः तेजस्युष्णः संख्यापरिमाणपृथक्त्वसंयोगवि
भागा नव द्रव्यवृत्तयः परत्वापरत्वे पृथिवीजलतेजोवायुमनोवृत्तिनी बुद्धिसुखदुःखेच्छाद्वेष
कृतिभावनाधर्माधर्मा आत्मवृत्तयः गुरुत्वं पृथिवीजलवृत्ति द्रवत्वं पृथिवीजलतेजोवृत्ति तत्
द्विविधं नैमित्तिकं सांसिद्धिकं च आद्यं पृथिवीतेजसोः द्वितीयं जले स्नेहो जलमात्रवृत्तिः संस्का

तर्की· ५

ध्याभावप्रतीतिरितिवाच्यं अन्यतरस्याविरुद्धकरत्वात् संयोगस्त्रिविधः अन्यतरकर्मजः उभयक
र्मजः संयोगजश्च आद्यो यथा मनः कर्मणात्ममनसोः संयोगः द्वितीयो यथा मेषयोः कर्मणा
तयोः संयोगः तृतीयो यथा कारणाकारणसंयोगात्कार्याकार्यसंयोगः हस्ततरुसंयोगात्का
यतरुसंयोगः विभागोपि त्रिविधः अन्यतरकर्मजः उभयकर्मजः विभागजश्च आद्यो यथात्म
नः कर्मणात्ममनसोर्विभागः द्वितीयो यथा मेषयोः कर्मणा तयोर्विभागः विभागजस्तु विभा
गो द्विविधः कारणमात्रविभागजः कारणाकारणविभागजश्च आद्यो यथा कपालकर्मणा क
पालद्वयविभागः ततः कपालद्वयसंयोगनाशः ततो घटनाशः ततः कपालस्याकाशादि

5

देशाद्विभागजो विभागः न च विभागः स्वोत्पत्त्यनंतरमेव विभागजविभागं जनयत्विति वाच्यं
द्रव्यनाशसहकृतस्यैव तस्य तज्जनकत्वात् तत्र द्रव्यस्य प्रतिबंधकत्वेन सति द्रव्ये तदसंभवा
त् न च कर्मैव एकदा कपालद्वयविभागमाकाशकपालविभागं च जनयत्विति वाच्यं यद्द्रव्या
नारंभकसंयोगविरोधिनं विभागमारभते न तत् द्रव्यारंभकसंयोगविरोधिनं यथा विकस
त्कमलकमलदलकर्मैतिव्याप्तेः न च संयोगोप्येवमस्तु तत्राविरोधात् द्वितीयस्तु कारणाका

पु ५

विभागजविभागोन्यतोऽ

विशेषगुणाः अवयविनि स्वसमानजातीयगुणानारभंते पृथिवीविशेषगुणाः पाकजास्ते द्विवि
धाः पाकप्रयोज्याः पाकजन्याश्च कारणगुणप्रक्रमजन्याः पाकप्रयोज्याः अग्निसंयोगजन्याः
द्वितीयः एणामघटस्याग्निसंयोगेन श्यामरूपनाशानंतरं घटे रक्तरूपमुत्पद्यते इति नैयायिक
मतं अग्निसंयोगेन परमाणौ पाके सति परमाणुषु रक्तरूपमुत्पद्यते पुनर्द्व्यणुकोत्पत्तौ सत्यां कार
णगुणप्रक्रमेण घटे रक्तरूपमुत्पद्यते इति वैशेषिकमतं कपाले नीलमेकमेकं च पीतं यदि तदा
घटे चित्ररूपमुत्पद्यते रसादावेवं सति अवयविनि रसो न जायते चित्ररसाद्यस्वीकारात् गुरुत्व
स्थितिस्थापकयोश्च कारणगुणप्रक्रमजन्यता द्वित्वादयोऽपेक्षाबुद्धिजन्याः परिमाणं च त्रिवि
धं अणुमहत् ह्रस्वदीर्घं च कारणगुणप्रक्रमजन्यं संख्यावयवबहुत्वं च महत्त्वजनकं यथा त्रसरेणु
अवयवानां शिथिलसंयोगः प्रचयोपि तज्जनकः यथा तूलपरिमाणे पृथक्त्वं कारणगुणप्रक्र
मजन्यं ननु नत्वक्रियमाणं घटात्पटः पृथगिति प्रत्ययेन तस्यान्योन्याभावविषयकत्वमिति चेन्न
अन्योन्याभावप्रतीतेः अन्ययोगिप्रतियोगिनोः समानविभक्तिकत्वनियमात् यथा घटो न पटः
इत्यन्योन्याभावस्य पृथक्त्वरूपत्वे घटो न इत्यपि प्रयोगापत्तेः न चैवं घटादन्यः पटः इत्यत्र कथमन्यो

शो विपर्ययमध्ये बोध्यः तत्र नैयायिकमते स्वमानध्यवसायो विपर्ययमध्ये प्रविष्टो नेनतन्मते अयथार्थ
ज्ञानं द्विविधं संशयो विपर्ययश्च सुखं धर्मजन्यं दुःखमधर्मजन्यं इच्छा इष्टसाधनताज्ञानजन्या द्वेषोऽनि
ष्टसाधनताज्ञानजन्यः कृतिस्त्रिविधा जीवनयोनियत्नः प्रवृत्तिर्निवृत्तिश्च आद्या जीवनादृष्टज
न्या द्वितीया इच्छाजन्या तृतीया द्वेषजन्या धर्मः श्रुतिविहितकर्मजन्यः अधर्मः श्रुतिविरुद्धाचरण
जन्यः वेगाख्यसंस्कारः प्रथमक्रियाजन्यः द्वितीयादिक्रियाजनकः यथा वेगेन वाणश्चलतीति भा
वनाख्यसंस्कारो विशिष्टज्ञानजन्यः स्थितिस्थापकाख्यः कारणगुणप्रक्रमजन्यः गुरुत्वं कारणगु
रुत्वजन्यं नैमित्तिकद्रवत्वं जतुघृतसुवर्णादीनामग्निसंयोगजन्यं सांसिद्धिकद्रवत्वं कारणगुणप्रक्र
मजन्यं स्नेहः कारणगुणप्रक्रमजन्यः शब्दस्त्रिविधः संयोगजो विभागजः शब्दजश्च आद्यो भेरी
दंडसंयोगजन्यः द्वितीयो वंशादिदलद्वयविभागजन्यः तृतीयस्तु संयोगेन विभागेन च आद्यशब्दे
जनितेन तेन शब्देन निमित्तवायुसहकृतेन वीचीतरंगन्यायेन कदंबगोलकन्यायेन वा जन्यते उत्क्षेप
णापक्षेपणाकुंचनप्रसारणगमनानि पंचकर्माणि उत्क्षेपणत्वादीति जातयः पृथिवीजलतेजो
वायुमनोवृत्तीनि कर्माणि सर्वाण्यनित्यानि अतींद्रियवृत्तीनि अतींद्रियाणि प्रत्यक्षवृत्तीनि प्रत्य

6

रणविभागात्कार्याकार्यविभागः करतरुविभागात्कायतरुविभागः परत्वापरत्वोत्पत्तिःका
लप्रकरणेउक्ताबुद्धिर्ज्ञानं तत् द्विविधं स्मरणमनुभवश्चस्मरणंद्विविधं यथार्थंअयथार्थंच त
त्तितत्प्रकारकत्वंयथार्थत्वं तदभाववतितत्प्रकारकत्वमयथार्थत्वंपूर्वानुभवः संस्कारद्वारा
स्मरणंजनयति तत्रपूर्वानुभवस्ययथार्थत्वायथार्थत्वाभ्यांस्मरणस्यप्रमात्वमप्रमात्वंभवति अनुभवो
द्विविधः प्रमाप्रयथार्थश्च तत्रप्रमाचतुर्विधावक्ष्यते अयथार्थज्ञानंचतुर्विधं संशयोविप
र्ययःस्वप्नोनध्यवसायश्च संशयो यथासमानधर्मवद्धर्मिज्ञानविशेषादर्शननानाकोटिस्मर
णैरयंस्थाणुर्वापुरुषोवेतिज्ञानंजन्यतेसएवसंशयः विपर्ययस्तुसमानधर्मवद्धर्मिज्ञानवि
शेषादर्शनैककोटिस्मरणैः शुक्ताविदंरजतमितिज्ञानंजन्यते तत्रगुरुमते इदमित्यनुभवा
त्मकज्ञानंरजतमितिस्मरणात्मकंतेनग्रहणस्मरणात्मकज्ञानद्वयं नतुरजतत्वविशिष्टज्ञानं
किंतु अनयोर्भ्याममग्राभानसामग्र्यभावात् प्रवृत्तिश्चस्वतंत्रोपस्थितेष्टभेदाग्रहात् नैयायिकमतेप्रवर्त
कंविशिष्टज्ञानंतेनभ्रमःसिध्यति स्वप्नस्तु अननुभूतपदार्थस्मरणैरदृष्टेनधातुदोषेणजन्यते अनध्य
वसायस्तु किंचिदितिज्ञानंविशेषादर्शिनाद्भवति अनध्यवसायविषयोनिर्वाहः स्यात्तदानिर्भ्रमःस्यादितित

न.का. ७

गमोत्माभावावजन्यावविनाशिनौच योग्यानुपलब्ध्या ऽभावः प्रत्यक्षः अन्यत्त्वतींद्रियः अथ प्रमा
कथ्यते साचतुर्विधा प्रत्यक्षानुमित्युपमितिशाब्दरूपा तत्करणानिप्रमाणानिचत्वारि प्रत्यक्षानुमा
नोपमानशब्दभेदात् तत्रप्रत्यक्षंद्विविधं निर्विकल्पकंसविकल्पकंच प्रत्यक्षकरणानिषडिंद्रिया
णि घ्राणरसनाचक्षुस्त्वक्श्रोत्रमनांसि एतानिसन्निकर्षसहितानिप्रत्यक्षंजनयंति सन्निकर्षश्चा
लौकिकोलौकिकश्च अलौकिकस्त्रिविधः ज्ञानलक्षणासामान्यलक्षणायोगजधर्मश्च लौकिकः
षड्विधः संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेष
णताचेति संयोगेनद्रव्यग्रहः संयुक्तसमवायेनघ्राणाद्यगुणकर्मद्रव्यवृत्तिजातीनांप्रत्यक्षंसंयुक्तस
मवेतसमवायेनशब्दमात्रवृत्तिजातीतरगुणवृत्तिजातिकर्मवृत्तिजातीनांप्रत्यक्षंसमवायेनशब्द
स्यसमवेतसमवायेनशब्दवृत्तिजातेः विशेषणतयाश्च अभावस्यसमवायस्यच अलौकिकःसयथा
ज्ञानलक्षणायास्तुरभिवेदनमितिचाक्षुषज्ञानसामान्यलक्षणयाघटत्वेनरूपेणयावद्घटज्ञानंयो
गजधर्मेणयोगिनांसर्वज्ञानंतत्रनिर्विकल्पकंविशेष्यप्रकारतादिरहितवस्तुस्वरूपमात्रज्ञानंसवि
कल्पकंसप्रकारकंभासमानवैशिष्ट्यप्रतियोगित्वंप्रकारत्वंयथाऽयंघटःअत्रायंविशेष्यःघटत्वंप्रका

४ ७

ताणि अथ कर्मोत्पत्तिप्रक्रिया संयोगेन नोदनाख्येनाद्यं कर्म जन्यते द्वितीयाद्विभागजं क्रियातो वि
भागः विभागात्पूर्वसंयोगनाशः ततः उत्तरदेशसंयोगोत्पत्तिः ततः कर्मविभागयोर्नाशः सा
मान्यं त्रिविधं व्यापकं व्याप्यं व्याप्यव्यापकं च व्यापकं सत्ता व्याप्यं घटत्वादि द्रव्यत्वादि व्याप्यव्यापकं च
व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः रूपहानिरसंबंधो जातिबाधकसंग्रहः नित्यत्वे सत्यनेकसम
वेतत्वमिति सामान्यलक्षणं सामान्यानि नित्यान्येव अतींद्रियवृत्तीन्यतींद्रियाणि प्रत्यक्षवृत्तीनि
प्रत्यक्षाणि नित्यद्रव्यवृत्तयो व्यावृत्तिका विशेषाः ते च बहवो नित्या अतींद्रियाश्च प्रलये परमाण
नांभेदायतेस्वीक्रियंते तेषां वैधर्म्यव्याप्यत्वादिति संबंधिभिन्नो नित्यसंबंधः समवायः तेन
स्वरूपसंबंधस्य संयोगस्य च निरासः इह घटे घटत्वमिति प्रतीतिस्तत्र प्रमाणं नैयायिकमते समव
वायः प्रत्यक्षः स च नित्य एव नवद्रव्याण्यपि ग्रंथकारस्तु वर्णादीनि द्रव्याणि संति आलस्यादयो
गुणा अपि संति कथं न वैवेत्यादिमेवं ग्रंथकारेण द्रव्यं किं तु तेजोभावः स्वर्णं तेज एव आलस्य
कृत्यभावः एवमन्यदपि बोध्यं अभावो द्विविधः संसर्गाभावोऽन्योन्याभावश्च आद्यस्त्रिविधः
प्रागभावो ध्वंसोऽत्यंताभावश्च प्रागभावो विनाशी अजन्यः ध्वंसो जन्योऽविनाशी अत्यंताभा

आदिपदेन पर्वतादिस्थानानन्तरं परामर्शजानस्त
देवग्राह्यं यत्ज्ञानं यत्ज्ञानं वेतिभावः=१



तिः व्यापारवदसाधारणं कारणं करणं व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः हेतुत्वोनादिकरणे प
रामर्शो व्यापारः परामर्शश्च व्याप्तिविशिष्टपक्षधर्मताज्ञानं यथा वह्निव्याप्यधूमवानयमिति आदौ
महानसादौ धूमवह्निसामानाधिकरण्यग्रहस्ततो धूमो वह्निव्याप्य इत्यनुभवो जायते ततः कालान्तरे
पर्वते धूमे दृष्टे सति व्याप्तिस्मरणं ततस्तद्विशिष्टवैशिष्ट्यज्ञानं वह्निव्याप्यधूमवानयमिति तृतीयः
लिङ्गपरामर्शः पक्षतासहितेन ततः पर्वतो वह्निमानित्यनुमितिर्जन्यते व्याप्तिश्च हेतुसमानाधिक
रणात्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरण्यं न चायं संयोगवान् द्रव्यत्वात् इत्यत्राव्याप्तिः
प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्था
त् पक्षता च सिसाधयिषाविरहसहकृतसिद्ध्यभावः अनुमानं द्विविधं स्वार्थं परार्थं च तत्र परार्थं पञ्चाव
यवसाध्यं अवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि यथा पर्वतो वह्निमान् धूमात् यत्र यत्र धूम
स्तत्र तत्र वह्निः यथा महानसः वह्निव्याप्यधूमवानयं तस्माद्वह्निमान् स्वार्थं च स्वीयव्याप्त्यादिज्ञान
साध्यं तत्र परप्रतिपत्त्यर्थमिवाहृत्य पञ्चावयवप्रयोगः तच्चानुमानं त्रिविधं केवलान्वयि केवलव्यतिरे
कि अन्वयव्यतिरेकि भेदात् यत्र साध्यव्यतिरेको न कुत्राप्यस्ति स केवलान्वयि यथा घटोऽभिधेयः

८

8

रः भासमानवैशिष्ट्यं तयोः समवायः तस्य इति योऽयं घटत्वं सविकल्पकमेव विशिष्टवैशिष्ट्यज्ञानं यथा
घटं दंडीत्यत्र दंडत्वविशिष्टस्य वैशिष्ट्यं पुरुषे भासते अथ ज्ञानप्रक्रिया आदौ इंद्रियसंनिकर्षात् घट घटत्वे
इति निर्विकल्पकं ततो अयं घट इति विशिष्टज्ञानं तत्र परतः प्रामाण्यग्रहः इति नैयायिकाः यथा दोषश्च अयं
घट इति व्यवसायः ततो घटमहं जानामीत्यनुव्यवसायः ततः प्रामाण्याप्रामाण्ये इति कोटिद्वयस्मरणं
अथ चतुर्थं इदं ज्ञानं प्रमा न वेति प्रामाण्यसंशयः ततो विशेषदर्शनानंतरं प्रामाण्यग्रहः इदं ज्ञानं प्र
मा समर्थप्रवृत्तिजनकत्वात् ज्ञानांतरवत् स्वतः प्रामाण्यग्रहः इति त्रयो मीमांसकाः तत्र गुरुमते
अयं घट इति ज्ञानं विषयं आत्मानं ज्ञानप्रामाण्यं च स्फुरति इति मिश्रमते अयं घट इति ज्ञानानंतरं घ
टमहं जानामीत्यनुव्यवसायः तेनैव प्रामाण्यग्रहः भट्टमते ज्ञानस्य अतींद्रियत्वेन ज्ञानमनुमेयं
यथा तथा भवस्येव प्रामाण्यग्रहः यथा अयं घट इति ज्ञानानंतरं घटे ज्ञातता उत्पद्यते ततो ज्ञातो मया घट इ
ति ज्ञातता प्रत्यक्षा ततो व्याप्त्यादि प्रत्यक्षानंतरं ज्ञानानुमानं यथा अहं घटत्वप्रकारकज्ञानवान् घटत्व
प्रकारकज्ञानतावत्त्वात् तावतैव तस्य धर्मिधर्मिविषयकत्वेन प्रामाण्यानुमानं इति श्रीजगदी
शभट्टाचार्यविरचिते तर्कामृते प्रत्यक्षपरिच्छेदः समाप्तः अथ अनुमितिकरणमनुमानं अनुमितित्वं जा

राम

र्मा ग्रयत्वात् अत्रवह्निरिंधनवत्त्वधर्मो वह्नित्वसमव्याप्तः साध्यस्यव्यापकस्समड्रूतरूपवत्त्वमुपाधिः तृती
योयथाध्वंसोविनाशीजन्यत्वात् अत्रजन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वमुपाधिः अथहेत्वाभा
साःकथ्यंते सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पंचहेत्वाभासाः सव्यभिचारस्त्रिविधः सा
धारणासाधारणानुपसंहारिभेदात् साध्यात्यंताभाववद्वृत्तित्वं साधारणत्वं यथाधूमवान्वह्नेः सकलसपक्ष
विपक्षव्यावृत्तत्वमसाधारणत्वं यथापर्वतोवह्निमान्पर्वतत्वात् सर्वपक्षकत्वमनुपसंहारित्वं यथासर्वं
प्रमेयं अभिधेयत्वात् साध्याभावव्याप्तोहेतुर्विरुद्धः यथाघटोनित्यःसावयवत्वात् सत्प्रतिपक्षो
यथापर्वतोवह्निमान्धूमात्पर्वतोवह्न्यभाववान्महानसान्यत्वात् असिद्धस्त्रिविधः आश्रयासिद्धःस्व
रूपासिद्धोव्याप्यत्वासिद्धश्च यत्रपक्षोऽसन्नसिद्धसाधनंवास आश्रयासिद्धः यथाशशविषाणंनित्य
मजन्यत्वात् शरीरंहस्तादिमत् हस्तादिमत्तयाप्रतीयमानत्वात् यत्रपक्षावृत्तिर्हेतुःसस्वरूपासिद्धः य
थापर्वतोवह्निमान्महानसत्वात् सचविशेषणासिद्धविशेष्यासिद्धभागासिद्धभेदात्त्रिविधः आद्योय
थाशब्दोनित्यानि नित्यःचाक्षुषत्वेसतिजन्यत्वात् द्वितीयोयथाशब्दोनित्यःगुणत्वेसतिपरमाणुवृत्ति
त्वात् तृतीयोयथाएतानिद्रव्याणि निरवयवत्वात् सोपाधिव्याप्यत्वासिद्धः यथाधूमवान्वह्नेः वायो

नित्याभि २

२४

२५

साध्याभावसाधक हेतुतत्वयमसाधक

९

प्रमेयत्वात् अत्राभिधेयत्वस्य साध्यस्य व्यतिरेकाप्रसिद्धेः यत्र साध्याप्रसिद्धिः पक्षातिरिक्ते नास्ति स केवल
व्यतिरेकि यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् यत्रेतरभेदाभावः तत्र पृथिवीत्वाभावः यथा जला
दिव्यतिरेकव्याप्तौ साध्याभावो व्याप्यः हेत्वभावो व्यापकः सोऽन्वयव्यतिरेकी यत्र साध्यस्य साध्याभाव
स्यान्यत्र प्रसिद्धः यथा पर्वतो वह्निमान् धूमादिति अन्वयव्यतिरेकिणो हेतोः पंचरूपोपपन्नता
पक्षधर्मता सपक्षवृत्तित्वं विपक्षव्यावृत्तत्वं अबाधितत्वं असत्प्रतिपक्षत्वं चेति पंचरूपाणि
केवलान्वयिनि विपक्षव्यावृत्तत्वरहितं केवलव्यतिरेकिणि सपक्षसत्त्वरहितं च तद्रूपमेवापेक्षितं
यत्र साध्यसंदेहः स पक्षः यत्र साध्यनिश्चयः स सपक्षः यत्र साध्याभावनिश्चयः स विपक्षः पक्षे सा
ध्याभावो बाधः साध्यविरोधिसाधको हेतुः सत्प्रतिपक्षः सोपाधौ सपक्षसत्त्वाद्यन्यतरभंगः स्याद
व्यापकः सोपाधिश्च स्वव्यभिचारितानुमेये न उपाधिविशिष्टः उपाधिश्च त्रिविधः साधनाव्यापकत्वे
सति शुद्धसाध्यव्यापकः साधनाव्यापकत्वे सति पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनाव्यापक
त्वे सति साधनावच्छिन्नसाध्यव्यापकश्च आद्यो यथा अयोगोलके धूमवह्नेः आर्द्रेन्धनप्रभववह्नि
मत्त्वमुपाधिः साधनाव्यापकत्वे सति शुद्धसाध्यव्यापकः द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्

नवीनास्तु गम्यते ग्राम इत्यत्र धात्वर्थः संयोगावच्छिन्नः स्पंदः आत्मनेपदार्थः संयो
गः तृतीयार्थः कृतिस्तथा च देवदत्तवृत्तिकृतिजन्यसंयोगजनकस्पंदजन्यसंयो
गाश्रय एको ग्राम इतीत्थं कर्मप्रत्ययस्थले शाब्दबोधं वदंतीत्थमेवसर्वत्रबोध्यं =२

तर्क॰
९
10

इत्योपस्थितेरितीरबोधः प्रतिबध्यतिइत्यन्वयबोधोभवति । योगोवृत्तिरपिलक्षणैव यथाऽग्नि[र्मा]णवकः
गौर्वाहीकः । अन्नलक्षणायाम्प्रादिसाहाय्यप्रतीयते । शाक्यं पदं चतुर्विधं यौगिकं रूढं योगरूढं यौगिकरू
ढंच आद्यंयथा पाचकादिपदं योगार्थेन पाककर्तरि प्राह । द्वितीयंयथा विप्रादिपदं रूढपदं ब्राह्मण
वाचकं तृतीयंपंकजादिपदं योगरूढ्या पंकजनिकर्तृत्वेनपद्मत्वेन पद्मवाचकं चतुर्थं यथोद्भिदादिप
दं यौगिक[रूढ]मेकवाचकं लक्षणा द्विविधा जहत्स्वार्थाऽजहत्स्वार्था च आद्या यथा गंगायां घोष इत्या
दौ द्वितीया सर्वैकत्रि[?]णोयान्तीत्यादौ अत्रछत्रिणस्तदितरस्यापि गमनेनयः । अथ शाब्दबोधप्रक्रिया देव
दत्तोग्रामंगच्छति इत्यत्र ग्रामकर्मकगमनजनकवर्तमानकृतिमानित्यन्वयः । द्वितीयाया अर्थः कर्मत्वं
धातोर्गमनंजनकत्वं संसर्गमर्यादालभ्यं लटो वर्तमानत्वं आख्यातस्य कृतिस्तत्संबंधः संसर्गमर्यादाल
भ्यः यत्र कर्तृविकृतेर्बाधस्तत्र आख्यातस्य व्यापारादौ लक्षणा यथा रथोगच्छतीत्यत्र गमनजनकवर्तमा
नव्यापारवान्रथः दधिपयस्पेत्यादौ द्वितीयालोपस्थले दधिपदात् एवाजहत्स्वार्थलक्षणया दधि
कर्मत्वं चोपस्थापयति एकवचनाद्युपस्थापितमेकत्वादि सर्वत्र प्रधानतयैवोपस्थितेः त्वेति देव
दत्तेन गम्यते ग्राम इत्यस्य देवदत्तवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यर्थः कृतित्वसंसर्ग

ना६ क४ १०

रूढंयोगविशेषस्य

द्वितीयार्थः संयोगः धात्वर्थः स्पंदः आ
ख्यातार्थः कृतिस्त
थाच ग्रामवृत्तिसं
योगजनकस्पंदज
नकवर्तमानाकृतिमा
न्कृतिमानेकोदे
वदत्तः इति प्राची
नमते नव्यास्तु आधेयत्वं द्वितीयार्थः धात्वर्थः संयोगावच्छिन्नस्पंदः तथा
च ग्रामनिरूपिताधेयत्वाश्रयसंयोगजनकस्पंदानुकूलकृतिमानेको देवदत्तः
इत्यादि इतीत्थं शाब्दबोधं वदंति आधेयत्वस्य द्वितीयार्थत्वात् =६

गम्यते ग्राम इत्यत्र तृतीयार्थः कृतिः स्पंदः धात्व
र्थः आत्मनेपदार्थः संयोगस्तथा च देवदत्तवृत्ति
कृतिजन्यस्पंदजन्यफलाश्रयः एको ग्राम इति प्राचीनाः

यथानलकूटो वह्निमान् द्रव्यत्वात् तेनैतद्दोषरहितो हेतुः इत्यनुमानं व्याख्यातम् उपमितिकरणमुप
मानं कीदृशो गवय इति पृष्टो गोसदृशो गवय इत्युत्तरं ते यदा गोसदृशं प्राणिनं पश्यंति तदा पूर्वोक्त
वाक्यार्थस्मरणानंतरम् अयं गवयपदवाच्य इति शक्तिग्रहः सोपमितिरित्युपमानं ग्रामीणकः शब्दः प्र
माणं प्रकृतवाक्यार्थगोचरयथार्थज्ञानवानाप्तः पदज्ञानं करणं पदजन्यपदार्थोपस्थितिर्व्यापारः
वि५ आकांक्षायोग्यतासन्निधिज्ञानानि सहकारीणि फलं शाब्दबोधः स्वरूपयोग्यत्वे सति अजनिता
न्वयबोधकत्वमाकांक्षा तेन नन्दः कर्मत्वमानयनं कृतिरित्यत्र नान्वयबोधः स्वरूपायोग्यत्वात् अयमेति
पुत्रो राज्ञः पुरुषोऽपसार्यताम् इत्यत्र राज्ञः पुरुषः इति नान्वयबोधः पुत्रेणाजनितान्वयबोधकत्वात् बाध
कप्रमाविरहो योग्यता तेन वह्निना सिंचतीत्यत्र नान्वयबोधः अयोग्यत्वात् अव्यवधानेनान्वयप्रतियो
ग्युपस्थितिरासत्तिः तेन गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यत्र नान्वयबोधः ननु दृश्यतीति कथाह्यरित
त्वेतात्पर्यं तेन भोजनप्रकरणे सैंधवमानयेत्यत्र अश्वानयनबोधो न भवति वृत्त्या विना शब्देनान्
न्वयबोधो जन्यते वृत्तिर्द्विविधा शक्तिर्लक्षणा च शक्तिः घटादिपदस्य घटादौ लक्षणा यथा गंगायां घो
षः प्रतिवसतीत्यत्र गंगापदार्थे प्रवाहे घोषवासान्वयानुपपत्त्या गंगापदस्य तीरे लक्षणा कल्पते तथा

न२ श्री सत्यंभावानः ४

तत्र तात्पर्यज्ञानाभावात् प्रमाणत्रसंतुतद
न्वयबोधो भिद्यमान् नष्टानश्येवसहकारि
त्वात्स्यच तत्रसत्वादिनिभावः=३

तर्की.
११

ध्वंसत्वं च तदानींतनत्वप्रकृत्यर्थसजातीयक्रियां तद्ध्वंसकालीनत्वे सति वर्तमानादिकृतिविषयत्वंपा
पच्यते इत्यादौ तादृशकालीनत्वमेव यङ आयायते आख्यातस्य वर्तमानत्ववाचकत्वात् तद्विशिष्टवा
चकत्वं च यङः तदानींतनत्वं च स्थूलकालमादाय पूर्वकालीनत्वं क्त्वाप्रत्ययार्थः पूर्वत्वं च सन्नि
हितक्रियापेक्षया ध्वंसतत्पूर्वकालीनत्वं तत्प्रागभावकालवृत्तित्वं तदुत्पत्तिकालीनध्वंसप्रतियोगि
कालवृत्तित्वं वा तेन भुक्त्वा व्रजतीत्यत्र गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्तृभिन्नो व्रजतीत्य
२-६छ र्थः समानविभक्तिकत्वाभेदेन धर्मिवाचकत्वात् अव्ययत्वेन कारकविभक्तिलोपात् कालः ताम
वसानत्वघटितत्वघटितसाधारणो बोध्यः तेन पूर्वस्मिन् [illegible] गत्वा पश्चिम [illegible] समागत इत्यत्र
नाव्याप्तिः योगायोगाः भुक्त्वा व्रजति भोक्तुं व्रजतीत्यस्य भोजने इच्छावान् व्रजतीत्यर्थः भो
क्तुमिच्छतीत्यत्र कर्तरि लट् तेन भोजनकर्तारमात्मानमिच्छतीत्यर्थः सविशेषणे हीति न्यायात्
विशेषणे कर्ताविच्छानयः प्रकृतधात्वर्थे कर्तृत्वान्वयानन्वयः धात्वर्थजन्यफलवाक्कर्मत्वान्वयो
र्थः शत्रादीनां कर्ता वाच्यः सविषयकार्थप्रकृतिकानां तान्यपि लक्षणा एवं कर्तृकर्मकृता तेन
विशेष्ये आत्मनि [illegible]पेण कर्ता कर्म च वाच्यं भावकृत्सु घञादीनां प्रयोगसाधुत्वमात्रं धात्वर्थातिरिक्तस्य भावकृतां नाभ्य
न्वयस्य बाधितत्वात् द्वितीयो शेषीकृतावन्वयः भोक्तृत्वेनात्मानमिच्छतीत्यर्थः =३

आत्मनि सिद्धत्वेन
कायाः असंभवात्

प्रागभावानंतर्भाव
मतेनाह तदुत्पत्ति
=४

सविशेषणे [illegible]
नाविधि [illegible]
[illegible] विशेषणा
र्थः ११ कामनि

पचनं पाकः पक्तिरित्यादि बुधाकद्दल्येव बोधः =१

कर्तृ

वललभ्यं तृतीयार्थश्च कृतिः जन्यत्वं संसर्गः गमनं धात्वर्थः जन्यत्वं संसर्गः फलं कर्मीनेयपदार्थः
पौलितं संसर्गः भावप्रत्ययेन देवदत्तेन स्थीयते इत्यस्य देवदत्तवृत्तिकृतिजन्यः स्थापइत्यर्थः भावप्र
त्ययस्य लेफलाभावादात्मनेपदार्थो न भासते भविष्यत्वं लृटोऽर्थः नन्वविद्यमानप्रागभावप्रतियो
ग्युत्पत्तिकत्वं तेन गमिष्यतीत्यत्र विद्यमानप्रागभावप्रतियोग्युत्पत्तिकगमनानुकूलकृति
मानित्यर्थः लुटोऽर्थः अनद्यतनत्वमपि लङोऽर्थः उत्पत्तिर्भूतत्वं च भूतत्वमतीतत्वं तच्चोत्पन्नाव
न्नेति तथा च विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लङर्थः लिटोऽपि परोक्षत्वमतीतत्वं चार्थः तदन्वयः
पूर्ववदुत्पत्तौ लुङो अनद्यतनत्वमतीतत्वं चार्थः विधिलिङोऽर्थः कृतीष्टसाधनत्वे सति बलवदनिष्टाजन
केष्टसाधनत्वं स्वर्गकामो यजेतेत्यादौ कृतिसाध्यबलवदनिष्टाजनकेष्टसाधनयागकः स्वर्गकाम
२९ इत्यर्थः आशीर्लिङ्लोटोऽर्थः वक्त्रिच्छाविषयत्वं तेन घटमानयेत्यत्र घटकर्मकमदिच्छाविषयानय
नानुकूलकृतिमांस्त्वमित्यन्वयः व्याप्यक्रियया व्यापकक्रियाया आपादनं लृङोऽर्थः तात्पर्य
र्यात् क्वचिद्भूतत्वं क्वचिद्भविष्यत्वं लृङा बोध्यते सनः कर्त्रिच्छार्थः सन्नन्तात् आख्यातस्याश्रयत्वे
लक्षणा ॥ ज्ञविषयकार्थकप्रकृतिकाख्यातस्य लक्षणा आश्रयत्वे घटं जानातीत्यादौ यङोऽर्थः पौनः